पण्डिताग्रणीः षट्शास्त्रवेत्ता द्विजकर्मतत्परः॥ परोपकारी द्विजदेवभक्तो हुतावशिष्टान्नसदानुरक्तः ॥ ९ ॥ एतादृशो गौडकुले बभूव चतुर्थिलालो निजधर्मपालः ॥ श्रीसाम्बपादाब्जविलग्नचित्तः शिष्टानुयायी च निबन्धकर्ता ॥१०॥ धर्मशास्त्रेषु निष्णातः कर्मकाण्डस्य मर्मवित् ॥ ज्योतिर्वेत्ता भिषक्श्रेष्ठो नानागौडनिबंधकृत् ॥ ११ ॥ तेनेयं रचिता माला द्विजानां नित्यकर्मणाम् ॥ अनया प्रीयतां शंभुर्भवान्या सह सर्वदा ॥ १२ ॥ रसवेदांकेसोऽब्दे विक्रमादित्यसंज्ञके ॥ वैशाखशुक्लपंचम्यां पूर्णा मालाऽभवच्छुभा ॥ १३ ॥

इति श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिना श्रीवसिष्ठगोत्रोद्भवेन पंडितश्रीरामकृष्णामरचंद्रशर्मणां पौत्रेण श्रीकस्तूरिचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तवाजसनेयिना गौडवंशावतंसद्वादशमहानिबंधकर्त्रा पं० श्रीचतुर्थीलाल ( चौथमल ) शर्मणा विरचिता नित्यकर्मप्रयोगमाला समाप्ता ॥ शुभमस्तु ॥

---

पुस्तक मिलनेका ठिकाना—
खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम् प्रेस—बम्बई.